भावनोपनिषत् अथवा श्रीचक्रोपनिषत्

स्वाविद्यापदतत्कार्यं श्रीचक्रोपरि भासुरम् ।
बिन्दुरूपशिवाकारं रामचन्द्रपदं भजे ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा । भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः । व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ।
ॐ शान्तिः शान्तिः शान्तिः ॥

अथ भावनोपनिषत् ।
हरिः ॐ ।
आत्मानमखण्डमण्डलाकारमवृत्य सकलब्रह्माण्डमण्डलं
स्वप्रकाशं ध्यायेत् । ॐ श्रीगुरुः सर्वकारणभूता शक्तिः ।
तेन नवरन्ध्ररूपो देहः । नवशक्तिरूपं श्रीचक्रम् ।
वाराही पितृरूपा । कुरुकुल्ला बलिदेवता माता । पुरुषार्थाः
सागराः । देहो नवरत्नद्वीपः । त्वगादिसप्तधातुभिरनेकैः
संयुक्ताः सङ्कल्पाः कल्पतरवः । तेजः कल्पकोद्यानम् । रसनया
भाव्यमाना मधुराम्लतिक्तकटुकषायलवणभेदाः षड्रसाः
षड्तवः क्रियाशक्तिः पीठम् । कुण्डलिनी ज्ञानशक्तिर्गृहम् ।
इच्छाशक्तिर्महात्रिपुरसुन्दरी । ज्ञाता होता ज्ञानमग्निः
(ज्ञानमर्घ्यम्) ज्ञेयं हविः । ज्ञातृज्ञानज्ञेयानामभेदभावनं
श्रीचक्रपूजनम् । नियतिसहिताः शृङ्गारादयो नव रसा
अणिमादयः । कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया
ब्राह्म्याद्यष्टशक्तयः । (आधरनवकम् मुद्राशक्तयः ।)
पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थमनोविकाराः
(कामाकर्षिण्यादि) षोडष शक्तयः ।
वचनादानगमनविसर्गानन्दहानो(पादानो)पेक्षा(ख्य)-

भुद्धयोऽनङ्गकुसुमादिशक्तयोऽष्टौ । अलम्बुसा कुहूर्विश्वोदरी वरुणा हस्तिजिह्वा यशस्वत्यश्विनी गान्धारी पूषा शङ्खिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः । सर्वसंक्षोभिण्यादिचतुर्दशारगा देवताः । प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया इति दश वायवः । सर्वसिद्धिप्रदा देव्यो बहिर्दशारगा देवताः । एतद्वायुदशकसंसर्गोपाधिभेधेन रेचकपूरकशोषकदाहप्लावका (रेचकः पाचकः शोषको दाहकः प्लावका इति) प्राणमुख्यत्वेन पञ्चधोऽस्ति (जठराग्निर्भवति) । क्षारको दारकः क्षोभको मोहको जृम्भक इत्यपालनमुख्यत्वेन पञ्चविधोऽस्ति । तेन मनुष्याणां मोहको दाहको (नागप्राधान्येन पञ्चबिधास्ते मनुष्याणां देहगा) भक्ष्यभोज्यशोष्यलेह्यपेयात्मकं चतुर्विधमन्नं (पञ्चविधमन्नं) पाचयति। एता दश वह्निकलाः सर्वज्ञत्वाद्यन्तर्दशारगा देवताः । शीतोष्णसुखदुःखेच्छासत्त्वरजस्तमोगुणा वशिन्यादिशक्तयोऽष्तौ । शब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्राः पञ्चपुष्पबाणा मन इक्षुधनुः । वश्यो वाणो रागः पाशः । द्वेषोऽङ्कुशः । अव्यक्तमहत्तत्त्वमहदहङ्कार इति कामेश्वरी-वज्रेश्वरी-भगमालिन्योऽन्तस्त्रिकोणाग्रगा देवताः । (निरुपाधिकसंविदेव कामेश्वर । सदानन्दपूर्ण स्वात्मेव परदेवता ललिता । लौहित्यमेतस्य सर्वस्य विमर्श । अनन्यचित्तत्वेन च सिद्धिः । भावनायाः क्रिया उपचरः । अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुपासितव्यमिति विकल्पानामात्मनि विलापनम् होमः । भवनाविषयाणामभेदभवना तर्पणम् ।) पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनस्थितिः पञ्चदशनित्याः । श्रद्धानुरूपा धीर्देवता । तयोः कामेश्वरी सदानन्दघना परिपूर्णस्वात्मैक्यरूपा देवता । सलिलमिति लौहित्यकारणं सत्त्वम् । कर्तव्यमकर्तव्यमिति भावनायुक्त उपचारः । अस्ति नास्तीति कर्तव्यतानूपचारः । बाह्याभ्यन्तःकरणानां रूपग्रहणयोग्यतास्त्वित्यावाहनम् ।

तस्य बाह्याभ्यन्तःकरणानामेकरूपविषयग्रहणमासनम् ।
रक्तशुक्लपदैकीकरणं पाद्यम् ।  उज्ज्वलदामोदानन्दासनदानमर्घ्यम् ।
स्वच्छं स्वतःसिद्धमित्याचमनीयम् । चिच्चन्द्रमयीति
सर्वाङ्गस्रवणं स्नानम् । चिदग्निस्वरूपपरमानन्दशक्तिस्फुरणं
वस्त्रम् । प्रत्येकं सप्तविंशतिधा
भिन्नत्वेनेच्छाज्ञानक्रियात्मकब्रह्मग्रन्थिमद्रसतन्तुब्रह्मनाडी
ब्रह्मसूत्रम् । स्वव्यतिरिक्तवस्तुसङ्गरहितस्मरणां विभूषणम् ।
सच्चित्सुखपरिपूर्णतास्मरणं गन्धः । समस्तविषयाणां
मनसः स्थैर्येणानुसंधानं कुसुमम् । तेषामेव सर्वदा स्वीकरणं
धूपः । पवनावच्छिन्नोर्ध्वज्वलनसच्चिदुल्काकाशदेहो दीपः ।
समस्तयातायातवर्ज्यं नैवेद्यम् । अवस्थात्रयाणामेकीकरणं ताम्बूलम् ।
मूलाधारादाब्रह्मरन्ध्रपर्यन्तं ब्रह्मरन्ध्रादामूलाधारपर्यन्तं
गतागतरूपेण प्रादक्षिण्यम् । तुर्यावस्था नमस्कारः ।
देहशून्यप्रमातृतानिमज्जनं बलिहरणम् । सत्यमस्ति
लर्तव्यमकर्तव्यमौदासीन्यनित्यात्मविलापनं होमः । स्वयं
तत्पादुकानिमज्जनं परिपूर्णध्यानम् । एवं मुहूर्तत्रयं (मुहूर्तद्वितयं
मुहूर्तमात्रं वा) भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति
गद्यते। आदिमतेनान्तश्चक्रभावनाः । तस्य देवतात्मैक्यसिद्धिः ।
चिन्तितकार्याण्ययत्नेन सिद्ध्यन्ति । स एव शिवयोगीति कथ्यते ।
कादिहादिमतोक्तेन भावना प्रतिपादिता । जीवन्मुक्तो भवति । य एवं
वेद । इत्युपनिषत् । (सोऽथर्वशिरोऽधीते ।)

ॐ भद्रं कर्णेभिः शृणुयाम देवा  । भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः । व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु।
ॐ शान्तिः शान्तिः शान्तिः ॥

इत्यथर्वणवेदे भावनोपनिषत्सम्पूर्णा ॥